त्रिज्यया भाज्यः । एवं कृते मध्यात्स्पष्टेन न्यूनेन भवितव्यम् । यतो गुणकः स्वल्पो भाजको महान् । एवमाचार्येण स्वल्पान्तरत्वात्सुखार्थमूनः कल्पितः । स तु खखाष्टवेद ४८०० तुल्यः कल्पितः । अतो रेखास्वदेशान्तरयोजनगुणागति- रेभिर्भाज्या । फलं कला भवन्ति । ता ग्रहे प्रक्षेप्याः । तद्धनर्णवासना यथा— द्रष्टा यथा यथा रेखातः प्राग्व्रजति तथा तथा प्रागेवार्कोदयं पश्यति, पश्चाद्गच्छति चेत्तदा रेखोदयानन्तरं पश्यति । अतः प्राक्पश्चाद्दणं धनं कार्यम् । एवं देशान्तरसंस्कृतौ सूर्यचन्द्रौ कार्यौ । ततस्तिथिसाधनार्थं तयोरन्तरं कार्यम् । एवं सति लाघवार्थमाचार्येण देशान्तरकलानां नाड्या एव तिथिनाडीषु प्रक्षिप्तास्ता यथा गत्यन्तरं रेखास्वदेशान्तरयोजनैर्गुणितं सद्यावत्खखाष्टवेदैर्भाज्यते तावद्देशान्तरं कला एव भवन्ति । हरैक्यत्वात्तासां कलानां नाडीकरणार्थमनुपातः । गत्यन्तर- कलाभिः षष्टिघटिकास्तदाऽऽभिः कलाभिः किमिति । एवमन्तरयोजनानां पूर्वं गत्य- न्तरं गुणः, इदानीं हरः । अत उभयोर्नाशे कृतेऽन्तरयोजनानि षष्ट्या गुणितानि खखाष्टवेदैर्भाज्यानि । फलं घटिकास्तासां पलीकरणार्थं पुनः षष्टिर्गुणः । एवमन्तरयोजनानां गुणहरौ ३६०० । ४८०० । एतौ द्वादशशतैः १२०० अपवर्तितौ गुणस्थाने त्रयः ३ हरस्थाने ४ । यो राशिस्त्रिभिर्गुण्यते चतुर्भिर्भाज्यते स तावत्स्वचतुर्थांशोनस्तुल्य एव स्यात् । अत उक्तं—योजनानि स्वाङ्घ्र्यूनानि तत्प्रमाणैः पलैः किल तिथिः संस्कार्या । तत्राग्र आचार्येणाब्दप एव तिथौ प्रक्षिप्तः । तस्योपपत्तिमग्रे वक्ष्यामः । अतस्तान्यब्दप एव प्रक्षिप्तानि । तद्धनर्णोपपत्तिस्तु पूर्ववैपरीत्येन । यतो ग्रहे चेदृणं तदा तिथौ प्रत्यक्षं धनं दृश्यते । भोग्यत्वात् । चेद्धनं तदा ऋणमतो हीनाढ्यं विदधीतेत्युक्तम् ॥ ४ ॥

एवं सदेशान्तराब्दपमुक्त्वेदानीं शुद्धिमाह—

भव११निघ्नसमाः स्वषट्सहस्रां ६०००
शकहीनाः शरदां दिनांश १५ युक्ताः ।
तिथिपूर्वकशुद्धिरन्वितार्थैः ५
कृतबाणैश्च ५४ जिनैः २४ खरामतष्टाः ॥ ५ ॥

स्पष्टतरार्थम् । अत्र वासना । शुद्धिर्नाम शोधनं सौरवर्षस्य निःशेषः । चैत्रादेः सकाशाद्या- वतीभिस्तिथिभिः सौरं वर्षं शुध्यति निःशेषं भवति तास्तिथयः खलु शुद्धिसंज्ञाः । तत्रैकवर्षे तिथयश्चान्द्राः ३७१ । ३ । ५३ । २४ दृग्गणितैक्यकृद्ग्रगणोत्पादितसावनेषु दिन- क्षया यावत्क्षिप्यन्ते तावच्चान्द्रा भवन्तीति सप्रपञ्चं निरूपणं ग्रन्थविस्तरभयान्न लिखितम् । ताः खाग्नितष्टाः कृत्वा शेषं ११ । ३ । ५३ । २४ । एकस्मिन्वर्ष इदं तदेष्टवर्षैः किमित्यनुपाते कृत इष्टवर्षाण्यनेन गुण्यानि रूपेण १ भाज्यानि । तत्र लाघवार्थं खण्डगुणनं कृतम् । तत्रैकं खण्डं ११ एकस्मिन्वर्ष इदं तदेष्टवर्षैः

किमित्येवं त्रैराशिके कृते भवनिघ्नसमा इत्युपपन्नम् । खण्डशेषं ० । ३ । ५३ । २४ । अत्र पूर्णा चत्वारः ४० । ४ कल्पिताः । अनेन इष्टवर्षाणि गुण्यानि रूपेण भाज्यानि । अतोऽत्र संचारः । एतत्तुल्ये गुणे ० । ४ रूपतुल्यो हर१स्तदा रूपतुल्ये गुणे किमिति। लब्धाः पञ्चदश १५ । एवं रूपस्याविकृतत्वान्नाशे शरदां दिनांशयुक्ता इत्युपपन्नम् । पुनः पूर्वगुणं ० । ५३ । २४ कल्पितगुणादस्मात् ० । ४ विशोध्य गुणाधिकशेषं ० । ०६ । ३६ । अत्र पूर्ववदनुपाते कृतेऽनेनेष्टवर्षाणि गुण्यानि रूपेण भाज्यानि । अतोऽत्र संचारः । यद्येतत्तुल्ये गुणे रूपतुल्यो हरस्तदाऽऽचार्येण स्वकल्पिते भवमिते गुणे को हर इति। फलं षट्सहस्राणि ६००० । एवं भवगुणानां समानां षट्सहस्रांशस्तासामेव हीनः कार्यः । यतो गुणऽधिकं गृहीतम् । अत उक्तं—स्वषट्सहस्रांशकहीना इति। एवं कृते सावयवेनैव गुणेन ११ । ३५३ । २४ वर्षाणि गुणितानि भवन्ति । क्षेपोपपत्तिस्तु स्पष्टतरा । तिथयस्त्रिंशत्तुल्याः । वाराः सप्त । नक्षत्राणि सप्तविंशतितुल्यानि । तावन्त एव योगा इत्यत्राऽऽगमप्रमाणम् । एवमग्रे सर्वत्रानुसंधेयम्। अहो अत्राऽऽचार्येण तिथ्यादिस्पष्टनाडीज्ञानं रचितम्। तत्र सूर्येन्दू स्पष्टौ न कृतौ। न च तयोर्गती स्पष्टे कृते। न च तत्साधकमहर्गणादि साधितम् । एवमपि साधित एकैका तिथिर्भवति । अत्र त्वकस्मादेव वार्षिकं पञ्चाङ्गं सिध्यति । तत्र हेतुं वयं न जानीम इति दुस्तरगणितार्णवसंदेहतरङ्गसङ्गभङ्गितहृदया गणका मिथः परिभाषन्ते । अत्र तु वयं ब्रूमः । स्पष्टयोश्चन्द्रार्कयोस्तिथ्यादि साध्यम् । तदत्र मध्यमयोरेव साधयित्वा चन्द्रार्कमन्दफलनाडीभिर्यावत्संस्क्रियते तावत्स्पष्टयोरेव साधितं भवति । इति प्रत्यक्षोपपत्तिः । यतो मध्यमस्पष्टयोरन्तरं फलतुल्यमेव । एवं सौरवर्षादौ सूर्यकेन्द्रमुच्चतुल्यमेव । ततः प्रत्यहं निजगत्या प्रचाल्य ततोऽपि दैनंदिनानि फलान्यानीतानि यावद्वर्षदिनान्तम् । ३७१ । एवमेव सौरवर्षादौ चन्द्रमन्दकेन्द्रं वक्ष्यमाणं ज्ञात्वा तदपि निजगत्या प्रचाल्य ततोऽपि दैनंदिनानि फलान्यानीतानि । तत्र वक्ष्यमाणोपपत्तिकस्य चन्द्रकेन्द्रस्यैकवर्षे मानं राश्याद्यं ३ । २ । १ । ३। राश्याद्यपेक्षया नक्षत्राद्यस्य सूक्ष्मत्वाद्वक्ष्यमाणानुपातेन नक्षत्राद्यमस्य कृतं तन्मानं ६ । ५४ । २८ । ततो(त ऊ)र्ध्वाङ्कतुल्यमेव केन्द्रं प्रकल्पमानीतं तदधःस्थितावयवप्रमाणेनाग्रेऽनुपात उक्तः । तत्र लवादिफलानां नाडीकरणार्थमनुपातः । यदि गत्यन्तरकलाभिः षष्टिघटिकास्तदा फलकलाभिः का इति ताः फलनाडिका यावन्मध्यमतिथौ क्षिप्यन्ते तावत्स्पष्टा तिथिर्भवति । एवं वर्षादौ षट्तुल्यमेव केन्द्रं प्रकल्प्य सूर्योच्चतुल्यं सूर्यकेन्द्रं च प्रकल्प्य ताभ्यां दैनंदिनफलनाडिका मध्यतिथावस्मिन् ५९ । ४ संस्कृताः । एवं सौरवर्षादौ षट्तुल्यकेन्द्रस्पष्टास्तिथिनाड्यो लिखिताः । एवमेव वर्षादौ सप्ततुल्यं केन्द्रं प्रकल्प्य

ततो याः फलनाडिकाः पूर्वविरचितसूर्यफलनाडिकाश्च मध्यमतिथौ प्रक्षिप्ता वर्षादौ सूर्यकेन्द्रस्य स्थिरत्वात्ता एव सर्वत्रोपयुज्यन्ते । एवमेकादिकेन्द्रं प्रकल्प्य यावत्सप्तत्रिंशतिकेन्द्रपर्यन्तं फलनाडिका मध्यमतिथौ संस्कृत्यैकादिचान्द्रेषु यावदेकसप्तत्यधिकशतत्रयेषु सुखार्थं कृपालुनाऽऽचार्येण लिखिताः । यदा वर्षादौ रूपतुल्यं केन्द्रं तदेमा लिखिताः स्पष्टनाड्यः । यदा द्वितुल्यं तदा तत्स्था इत्यादि । अत एवाग्रे वक्ष्यति—निजकेन्द्रमपत्रकोष्ठमिति । एवं नक्षत्रवारादिसाधनम् । तद्यथा—चन्द्रगतिप्रमाणेन याः फलनाडिकास्ता एव मध्यनक्षत्रभोगे प्रक्षिप्ताः । एवं नक्षत्रनाडिकाः स्पष्टाः कृताः । एवमेव गतियोगप्रमाणेन याः फलनाडिकास्ता एव योगभोगे प्रक्षिप्ताः । एवं योगनाडिकाः स्पष्टा विरचय्य लिखिताः । तत्र भोगानयनं यथा—गत्यन्तरकलाभिः षष्टिघटिकास्तदा द्वादशभागकलाभिः किमिति । फलं मध्यमगतिप्रमाणेन तिथिभोगः ५९ । ४ । एवं चन्द्रगतिकलाभिः षष्टिघटिकास्तदाऽष्टशतकलाभिः किमिति । फलं नक्षत्रमानं ६० । ४३ । एवं गतियोगकलाभिः षष्टिघटिकास्तदाऽष्टशतकलाभिः किम् । फलं योगमानं ५६ । २८ । द्वादशभागतुल्ये चन्द्रार्कान्तर एका तिथिः । तथा चाष्टशतकलातुल्ये चन्द्र एकं नक्षत्रम् । चन्द्रार्कयोगेऽप्यष्टशतकलातुल्य एको योग इत्यादावागममङ्गीकृत्य, एतानि त्रैराशिकानि सुधीभिः कृतानि । ननु रूपादितुल्ये केन्द्र आचार्येण स्पष्टतिथ्यादि साधितं तदधःस्थितनाड्यावयवप्रमाणेन तु साध्यम् । यतः सावयवोऽनुपातस्तत्कथमिति चेत् । उच्यते । पूर्वकेन्द्रे परकेन्द्रे च यावत्यो लिखिताः स्पष्टनाड्यस्तासामन्तरेणानुपातः । यदि षष्टितुल्याभिः केन्द्रनाडीभिरिदं नाड्यन्तरं तदेष्टकेन्द्राधःस्थनाडीभिः किमिति । एवं कृत इष्टनाडीनां नाड्यन्तरं गुणः, षष्टिर्हरः, गुणहरौ नाड्यन्तरेणापवर्तितौ । गुणस्थाने रूपं हरस्थाने नाड्यन्तरोद्धृता षष्टिः । एवं प्रकृतिकोष्ठे नाड्यन्तरेण षष्टिर्विभज्य केन्द्राधःस्थनाडीनां हरा एवोत्पादिताः । तैर्हरैः केन्द्राधःस्थनाड्यो भाज्याः । फलेन वाराद्यं संस्कार्यम् । एवं कृते सावयवकेन्द्रादेव फलनाडिकाः कृता भवन्ति । हरधनर्णोपपत्तिस्तु नाड्यन्तरे क्रियमाणे प्रत्यक्षैव । अमुमेव प्रकारमग्रे वक्ष्यति—तदधःस्थितया धनर्णहृत्या विहृताभिर्निजकेन्द्रनाडिकाभिरिति । एवं सर्वेऽपि पुटस्थाङ्काः सुधियोत्पाद्याः ॥ ५ ॥

तत्र तावत्तिथ्यादिनाडीज्ञानार्थं सौरवर्षादौ चन्द्रकेन्द्रं मालिन्याऽऽह—

विचरणनग ६ । ४५ निघ्नो वेद ४ तष्टाब्दसंघोऽ-

ब्दगणरस ६ लवाढ्यस्तारकाद्यं च केन्द्रम् ।

यम २ निहतसमौघत्रिद्विदस्रां २ २ ३ शहीनं

सहितमुदधितुल्यैर्वेदपक्षैश्च धिष्ण्यैः ४।२४।२७।६॥

स्पष्टतार्थमत्रोपपत्तिः । केन्द्रं तावद्ग्रहोच्चान्तरम् । अत एव ग्रहभगणानां तदु-

च्चभगणानामन्तरं केन्द्रभगणाः । उक्तं च—खेचरोच्चभगणान्तरोन्मिताः सन्ति मन्द-
चलकेन्द्रपर्यया इति । एवं कृता ये केन्द्रभगणास्तेभ्योऽनुपातः । यदि कल्प-
वर्षैरेते केन्द्रभगणा लभ्यन्ते तदैकेन वर्षेण किमिति । भगणानां प्रयोजनाभावा-
ल्लब्धमेकवर्षे राश्यादिकेन्द्रं ३ । २ । ६ । १३ । अस्य नक्षत्रादिकरणेऽनु-
पातः । यदि द्वादशराशिभिः सप्तविंशतिनक्षत्राणि लभ्यन्ते तदाऽनेन राश्यादि-
केन्द्रेण किमिति । फलं ६ । ५४ । २८ । एकवर्ष इदं तदेष्टवर्षे किमित्ये-
वमनुपाते कृतेऽनेनेष्टवर्षाणि गुण्यानि, रूपेण भाज्यानि । तत्र लाघवार्थं खण्ड-
गुणनम् । एकं खण्डं ६ । ४५ पूर्ववदनुपाते कृते विचरणनगानिघ्न इत्युपपन्नम् ।
चतुर्भिवर्षैश्चक्रं भवति । तस्य प्रयोजनाभावाद्वेदतष्टाब्दसघ इत्युपपन्नम् । पूर्वखण्ड-
शेषं ० । ९ । २८ । अत्र पूर्णा दश कल्पिताः ० । १० । अत्रापि पूर्ववदनुपाते
कृतेऽनेनेष्टवर्षाणि गुण्यानि रूपेण भाज्यानि । अतोऽत्र संचारः । यद्येतत्तुल्ये गुणके
० । १० रूपतुल्यो हरस्तदा रूपतुल्ये गुणके क इति । लब्धाः षट् ६ ।
षड्भिर्वर्षाणि विभज्य पूर्वस्मिन्क्षेप्याणि । यतः पूर्वखण्डे न्यूनं गृहीतम् । अत
उक्तम्—अब्दगणरसलवाढ्य इति । पूर्वखण्डं ० । ९ । २८ कल्पितखण्डाद-
स्मात् ० । १० विशोध्य खण्डाधिकशेषं ० । ० । ३२ । एतत्त्रिद्विदस्रैः २२३
सवर्णितं गुणस्थाने द्वयं २ हरस्थाने त्रिद्विदस्राः २२३ । एभिर्विभक्तद्विगुणितवर्षाणि
पूर्वस्माच्छोध्यानि । यतः प्रथमखण्डेऽधिकं कल्पितम् । अत उक्तं—यमनिहतसमौघ-
स्त्रिद्विदस्रांशहीनमिति । एवं कृते सावयवेनानेन गुणेन ६ । ५४ । २८ गुण्यानि
वर्षाणि तानि भवन्ति । क्षेपोपपत्तिः स्पष्टतरा । एवं सौरवर्षादौ चन्द्रमन्दकेन्द्रं
नक्षत्राद्यं भवति ॥ ६ ॥

अथ सौरवर्षारम्भदिने तिथिनक्षत्रयोगनाडीनां मध्यमानां तिथिध्रुवनक्षत्रध्रुव-
योगध्रुवसंज्ञां कुर्वंस्तज्ज्ञानमुपेन्द्रवज्रया करोति स्म—

शुद्धिः खषट् ६० शोधितनाडिका स्या-
त्तिथिध्रुवोऽथ स्वदशांश १० हीना ।
शुद्धिश्च भूघ्न्यैकयुता खषड्भ्यः
संशुद्धनाडीभुजयोर्ध्रुवः स्यात् ॥ ७ ॥

स्पष्टार्थम् । अत्रोपपत्तिः । सौरवर्षादौ शुद्धितुल्या एव गततिथयो भवन्ति । तस्मा-
च्छुद्ध्योऽपि गताः । अस्माकं त्वेष्यतिथिनाडीज्ञानमेवाभीष्टम् । अतः खषड्शो-
धितनाडिकाशुद्धिरित्यनेन तिथिभोग्यनाड्य एव ज्ञाता भवन्ति । परं ता मध्यमा
यावत्फलनाडीभिः संस्क्रियन्ते तावद्वर्षारम्भदिने स्पष्टास्तिथिनाड्यो भवन्ति । तत्र
तासां मध्यमनाडीनां प्रतिपत्त्यर्थं मूलयुक्तिरुच्यते । तत्र लिख्यन्ते चन्द्रार्कान्तरं द्वादश

भागाः । यतो मासान्ते चन्द्रार्कान्तरं भगणांशतुल्यं स्यात् । उक्तं च—रवीन्द्वोर्युतेः संयुतिर्यावदन्या विधोर्मास एतच्च पैत्र्यं बुरात्रमिति । संयुतिस्तु भगणांशतुल्येनान्तरेण विना न संभवति । अतोऽनुपातः । यदि मासदिनैस्त्रिंशद्भिर्भगणांशा ३६० अन्तरं लभ्यते तदैकेन किमिति । लब्धा द्वादश भागाः १२ । सौरवर्षादौ शुद्धितुल्यास्तिथयो यावद्द्वादशभिर्गुण्यन्ते तावत्सूर्यस्य शून्यत्वाच्चन्द्रार्कान्तरं चन्द्रतुल्यमेव स्यात् । पुनस्तद्भागाः सूर्यहृता गततिथयो भवन्ति । शेषं च गतं तद्यावद्द्वाशभ्यः शोध्यते तावद्भोग्यं स्यात् । तस्य कलाः कृत्वाऽनुपातः—गत्यन्तरकलाभिः षष्टिघटिकास्तदाऽऽभिः कलाभिः किमिति । फलमेष्यास्तिथिनाड्यो भवन्ति । ता अपि मध्यमाः । चन्द्रस्य मध्यमत्वात् । ताः शुद्धिभोग्यनाडीतुल्या एव । एतच्चान्द्रमानमध्ये मध्यममानेन गत्यन्तरं द्वादशतुल्यमेव । अतो द्वादशतुल्ययोर्गुणहरयोर्नाशे कृते शुद्धिनाड्य एव भोग्याः कार्यास्ता एव मध्यमतिथिनाड्यो भवन्ति । अतः खषट्शोधितनाडिका शुद्धिरित्युपपन्नम् । नक्षत्रयोगध्रुवोपपत्तिर्यथा—नक्षत्रयोगध्रुवो नाम सौरवर्षादौ चैत्रादेः सकाशाद्यावन्ति नक्षत्राणि यावन्तो योगाश्च तेषां मानं तस्य ध्रुवसंज्ञा कृता । यतो वर्षपर्यन्तं ध्रुव एव । स्थिर इत्यर्थः । नक्षत्रयोगध्रुवयोरेकध्रुवत्वे हेतुरुच्यते । नक्षत्रं चन्द्राद्भवति । वर्षादौ रवेः शून्यत्वात् । चन्द्रार्कयोगोऽपि चन्द्रतुल्य एव स्यात् । तस्माद्योगो नक्षत्रं च तस्मादेव सिध्यति । यावत्संख्यं नक्षत्रं तावत्संख्यो योगः । अतस्तयोरेक एव ध्रुव उक्तः । वर्षादौ नक्षत्रयोगयोरेकत्वेऽपि तन्नाडीनां भिन्नत्वम् । यतो नक्षत्रानयने चन्द्रगतिर्हरः, योगानयने गतियोगो हरः । एवं कदाचित्स्पष्टत्वेन नक्षत्रयोगयोरपि भिन्नत्वं, मध्यमप्रमाणेनैक्यमेव । तत्साधनं यथा—शुद्धिर्द्वादशगुणा चन्द्रः स्यात् । तस्य कलाः सप्तविंशत्या गुण्याः, चक्रकलाभिर्भाज्याः । फलं भानि योगाश्च भवन्ति । एवं शुद्धेर्द्वादशषष्टिः सप्तविंशतिश्च गुणश्चक्रकला हरः । गुणघातो गुणः । एवं शुद्धेर्गुणहरौ १९४४० एभि२१६०रपवर्तितौ गुणस्थाने नव ९ हरस्थाने दश १० यो राशिर्नवभिर्गुण्यते २१६०० दशभिर्भाज्यते स तावत्स्वदशांशोनस्तुल्य एव स्यात् । अत उक्तं—स्वदशांशहीनेति । शेषं स्पष्टतरवासनम् ॥ ७ ॥

अथ पूर्वं कृतं तिथ्याद्यं तत्कालीनं केन्द्रमिन्द्रवज्रयाऽऽह—

तिथ्यृक्षयोगध्रुवनाडिकाद्यं नागाश्विभिः २८ खार्क१२०मितैस्त्रिचन्द्रैः १३ ।
क्रमान्निजोत्थेन फलेन हीनं तद्युक्तकेन्द्रं हि निजं निजं स्यात् ॥ ८ ॥

स्पष्टार्थम् । अत्रोपपत्तिः—अत्र यत्कृतं केन्द्रं तत्सौरवर्षादिजं तदधुना स्वस्वगत्या

प्रचाल्य तिथ्याद्यन्तकालीनं क्रियते । तद्यथा—यदि षष्टिघटिकाभिर्गतिलवा लभ्यन्ते तदा
तिथिध्रुवनाडीतुल्यतिथिनाडीभिः किमिति । एवं तिथिध्रुवनाडीनां गतिलवा गुणः,
षष्टिर्हरः, फललवा यावद्राश्यादिकेन्द्रे प्रक्षिप्यन्ते तावत्तिथ्यन्तकालीनं जायते । तत्र
मध्यमकेन्द्रगतिचान्द्रमानेन मध्येऽनुपातेनाऽऽनीता, एकपञ्चाशत्कला द्वादशभागाधिकाः
१२।५१ मध्यमा । इयं तिथिध्रुवनाडीभिर्गुण्या षष्ट्या भाज्या । फलं लवाः। ते सप्तविंशत्या
गुण्याः, भांशैर्भाज्याः । फलं नक्षत्रादिचालनं स्यात् । तन्नाडीकरणार्थं षष्टिर्गुणः पूर्वं षष्टिर्हर
इदानीं गुणः । अत उभयोर्नाशः । एवं गतिलवाः सप्तविंशत्या तिथिध्रुवनाडी-
भिश्च गुण्या भांशैर्भाज्याः । गतिलवसप्तविंशतिघातो गुणः । भांशा हरः । गुणहरौ
गतिलवैरपवर्तितौ । गुणस्थाने सप्तविंशतिः, हरस्थानेऽष्टाविंशतिः । यो राशिः सप्तविं-
शत्या गुण्यतेऽष्टाविंशत्या भज्यते स तावत्स्वाष्टाविंशत्यंशोनस्तुल्य एव स्यात् ।
अत उक्तं–तिथिध्रुवनाड्याद्यङ्कानाश्विभिः फलेन हीनमिति । तदेतत्तिथिकेन्द्रचालनं
तेन युक्तं केन्द्रं कार्यम् । अत एव वक्ष्यति—तद्युक्तकेन्द्रं हि निजं निजमिति ।
एवमेव तस्य केन्द्रस्य नक्षत्रान्तकालीनकरणे नक्षत्रभोगमध्येऽस्मिन् ६० । ४३
कृता चन्द्रगतिः १३ । १३ । १२८ । योगभोगमध्ये च १२ । १८ । २ ।
अनयैव युक्त्या नक्षत्रयोगध्रुवतुल्याभिर्नक्षत्रयोगनाडीभिः केन्द्रं प्रचाल्यम् । त-
यथा—प्राग्वद्यथोक्ते कृते गतिलवसप्तविंशतिघातो गुणः, भांशा हरः । गुणहरौ
३५७ । ३६० । गुणहरयोरन्तरेण यावद्भांशा भज्यन्ते तावत्खार्काः १२० एव
लभ्यन्ते । अतो गुणाल्पत्वात्खखार्कांशोना भध्रुवनाड्यः कृताः । ता एव चालनम् ।
तद्युक्तं यावत्केन्द्रं क्रियते तावन्नक्षत्रान्तकालीनं कृतं भवति । अत उक्तं-
भध्रुवनाडिकाद्यं खार्क१२०मितैः फलेन हीनं कार्यम् । तद्युक्तं केन्द्रं निजं
स्यान्नक्षत्रकेन्द्रं स्यादित्यर्थः । एवं योगान्तकालीनकरणेऽपि प्राग्वद्यथोक्ते कृते
गतिसप्तविंशतिघातो गुणः । भांशा हरः । गुणहरयोरन्तरेणानेन २७ । ३२ ।
यावद्भांशा भज्यन्ते तावत्त्रिचन्द्रा १३ एव लभ्यन्ते । अतो योगध्रुवना-
ड्यादि खत्रिचन्द्रांशेनोनं कार्यम् । तच्चालनं केन्द्रे योज्यम् । एवं कृते
केन्द्रं योगान्तकालीनं भवति । एकमेव चन्द्रमन्दकेन्द्रं तिथ्याद्यन्तकालीनम् । अतस्ति-
थिकेन्द्रं नक्षत्रकेन्द्रं योगकेन्द्रमिति संज्ञां कृतवान् ॥ ८ ॥

एवं केन्द्रत्रयमुक्त्वेदानीं पूर्वविरचितवाराद्यस्य संस्कारार्थं भोगसंज्ञं क्षेपं पृथ्व्याऽऽह—

तिथेर्ध्रुवघटीमुखं खयुगषट्कभागो६४नितं
ह्युडोर्भवति यन्निजाम्बुधिगजांश८४केनान्वितम् ।
युतेर्निजशिलोच्चयक्षितिलवोनितं तद्युतः
पृथक्पृथगिहाब्दपो निजनिजश्च भोगो भवेत् ॥ ९ ॥

स्पष्टार्थम्। अत्रोपपत्तिः। यत्पूर्वं कृतं वाराद्यन्ततिथिवाराद्यं तिथिध्रुवान्ताद्भयोगध्रुवान्तात्समागतं सौरवर्षादौ तु तिथिध्रुवनाडीतुल्य एव तिथ्यन्तः, भयोगध्रुवनाडीतुल्य एव भयोगान्तः। तत्र यावदब्दपः क्षिप्यते तावत्सूर्योदयात्सौरवर्षादेः सकाशात्सावनं नाडीज्ञानं भवति। यतस्तद्दिने तावानेव तिथ्यन्तः। स एव वारादिकस्य क्षेपः। एवं ध्रुवनाड्योऽब्दपे क्षेप्याः। तत्र ध्रुवनाडीनां चान्द्राणां सावनीकरणं यतोऽब्दपनाडीषु प्रक्षेप्याः। तत्र चतुःषष्टिचान्द्रैरेको दिनक्षयः। स यावच्चान्द्रेभ्यः शोध्यते तावत्सावना भवन्ति। अत उक्तं—तिथेर्ध्रुवघटीमुखं स्वयुगषट्कभागोनितमिति। एवमेव स्वस्वभोगमध्ये सजातीयं कृत्वा भध्रुवनाड्योऽब्दपे क्षेप्याः। तत्रानुपातः। यदि षष्टिघटिकाभिरिमा ध्रुवनाड्यस्तदाऽऽभिर्नक्षत्रभोगनाडीभिः ६०। ४३ किमिति। एवं कृते ध्रुवनाडीनामयं गुणः ६०। ४३ षष्टिर्हरः। गुणहरयोरन्तरेणानेन ०। ४३ यावत् षष्टिर्भज्यते तावदम्बुधिगजा एव लभ्यन्ते। गुणाल्पत्वाद्धरस्य युक्तं कार्यम्। अत [उक्तं] उडोर्नक्षत्रस्य ध्रुवनाड्यादि तन्निजाम्बुधिगजांशकेनान्वितमिति। एवमेव योगस्यामुं भोगं २६। २८ प्रकल्प्य यथोक्ते कृते शिलोच्चयक्षिति१७लवोनितमित्युपपद्यते। एवं सजातीयं दत्त्वा यावदब्दपः क्षिप्यते तावत्सौरवर्षारम्भदिने सूर्योदयादूर्ध्वं तिथ्यन्तभयोगान्तनाडीज्ञानं प्रत्यक्षं भवति। अत उक्तं—तद्युतः पृथक्पृथगिहाब्दप इति। तस्य भोगसंज्ञा कृता। अयं तिथ्यादिवाराद्ये यावात्क्षिप्यते तावदुदयानन्तरं स्पष्टतिथ्यादिनाडीज्ञानं भवति। यतोऽसौ सूर्योदयतिथ्यन्तयोरन्तरमेव। अत एवाग्रे वक्ष्यति—निजभोगयुतः स्वगोदयात्स्यादिति सर्वं निरवद्यम्॥ ९॥

अथ पूर्वकृतोपकरणानां कदाचित्स्वल्पमन्तरं भवेत्तथाऽपि तिथ्यादिसाम्यमेवेत्यनुष्टुभाऽऽह—

पूर्वोपकरणेभ्योऽत्र कदाचित्किंचिदन्यथा।
तथाऽप्येभ्योऽपि तिथ्यादि तुल्यमेवाऽऽगमिष्यति॥ १०॥

स्पष्टार्थम्। एवमनेन प्रकारेणोपकरणस्य साधनं कृत्वाऽऽचार्येण सुखार्थं मन्दानां क्लेशपरिहारार्थं च वेदाद्रीन्द्र१४७४तुल्यमिष्टं शाकं प्रकल्प्य विरचय्य लिखितानि। तत्करणं पूर्वमेवोक्तम्॥ १०॥

तान्येव ग्राह्याणीति सिंहोद्धतया वक्ष्यति—

शाकोऽब्ध्यगेन्द्ररहितो रसवेदभक्तः
शेषेऽब्दपादय इमे फलपङ्क्तिमाद्याः।
प्राक्पश्चिमे विचरणान्तरयोजनानि
भोगाब्दपेषु च पलानि कुरु स्वमस्वम्॥ ११॥

स्पष्टार्थम् । अत्रोपपत्तिः—पूर्वार्धस्य तु स्पष्टतरा । पूर्वमपि किंचित्प्रोक्ता । उत्तरार्धस्य तु पूर्वं प्रोक्तैव ॥ ११ ॥

एवंकृतेषूकरणेषु पश्चाङ्केतिकर्तव्यतां प्रहर्षिण्याऽऽह—

चैत्रादेर्गततिथयस्तिथिध्रुवोनाः
कार्याः स्युः खलु तिथिकोष्ठका द्विधा ते ।
स्वाङ्गाग्न्यंशकरहिताः क्रमात्स्वदृग्दृ-
ग्भागाढ्या उडुयुतिजाः स्युरुज्झिताग्राः ॥ १२ ॥

चैत्रादेः सकाशादिष्टतिथिपर्यन्तं यावन्तस्तिथयस्तास्तिथिध्रुवोर्ध्वाङ्केनैव हीनाः कार्याः । ते तिथिकोष्ठकाः स्युः । ते द्विधा स्थाप्याः । एकत्र स्वाङ्गाग्न्यंशकेन हीनास्ते नक्षत्रकोष्ठका भवन्ति । अपरत्र स्वदृग्दृग्भागाढ्यास्ते योगकोष्ठका भवन्ति । उज्झिताग्रा निरवयवा इत्यर्थः । अत्रोपपत्तिः—चैत्रादेर्यावन्तस्तिथयस्तास्तिथिध्रुवोना यावत्क्रियन्ते तावत्सौरवर्षादितो गृहीता भवन्ति । यतश्चैत्रादिसौरवर्षयोरन्तरं शुद्धितुल्यमेव । अत्र तु शुद्ध्यूर्ध्वाङ्केनैव हीनाः कार्याः । यतस्तदधोवयवस्य भोगो गृहीत्वाऽब्दपे प्रक्षिप्तः । एवं तदधःस्थितावयवोऽपि न्यूनः कृतो भवति । सर्वस्यास्योपपत्तिः सम्यक्प्रतिपादिता स्पष्टा च । य एव शुद्ध्यूर्ध्वाङ्कः स एवं तिथिध्रुवोनाः कार्या इत्युक्तं तत्सिद्धोपकरणाभिप्रायेण । यतस्तत्र तिथिध्रुवोर्ध्वाङ्क एव लिखितो नत्ववयवः । एवं तिथिध्रुवोनानां तिथीनां कोष्ठसंज्ञा कृता । एवमेव चैत्रादेर्नक्षत्रयोगाश्चेष्टदिनपर्यन्तं ग्राह्याः । तेऽपि स्वध्रुवोनाः सन्तो वर्षादितो गृहीता भवन्ति । तत्राऽऽचार्येण तिथिकोष्ठेभ्य एव नक्षत्रयोगसाधनं रचितम् । तद्यथा—एकतिथेर्मानं $\frac{५९}{४}$ नक्षत्रस्य च $\frac{६०}{४३}$ तिथिमानेनानेन $\frac{५९}{४}$ गुणितानां तिथिकोष्ठानां यावन्नक्षत्रमानेनानेन $\frac{६०}{४३}$ भोगा गृह्यन्ते तावन्नक्षत्रमानमेव जायत इति प्रत्यक्षमनुपातसिद्धम् । एवं कृते तिथिकोष्ठानां गुणहरौ जातौ $\frac{५९}{४}$ । $\frac{६०}{४३}$ । गुणहरयोरन्तरेणानेन १ । ४० यावद्धरो भज्यते तावदङ्काग्रय ३६ एवोत्पद्यन्ते । हराधिकत्वात्फलं शोध्यम् । अत उक्तं—स्वाङ्गाग्न्यंशकरहिता इति । एवं कृते वर्षादेः सकाशाद्गतनक्षत्राणि भवन्तीत्यर्थः । एवं योगस्य मानमिदं ५६ । २९ प्रकल्प्यास्य पूर्ववद्यथोक्ते कृते तिथिकोष्ठानां गुणहरौ $\frac{५९}{४}$ । $\frac{५६}{२९}$ । अनयोरन्तरेणानेन $\frac{२}{३५}$ यावद्धरो भज्यते तावद्द्वाविंशतिरेव लभ्यते । हराल्पत्वाद्युक्तं कार्यम् । अत उक्तं स्वदृग्दृग्भागाढ्यास्तिथयो योगा भवन्ति । उज्झिताग्रा इत्यस्योपपत्तिस्तु तिथिकोष्ठवज्ज्ञेया ॥ १२ ॥

अथ कोष्ठप्रयोजनमाह—

निजकेन्द्रभपत्रकोष्ठमित्यां लिखितो यो ध्रुवकः सुसंस्कृतोऽसौ।
तदधःस्थितया धनर्णहृत्या विहृताभिर्निजकेन्द्रनाडिकाभिः ॥ १३ ॥

निजं यत् केन्द्रं तस्य भं तस्य यत् पत्रं तस्य या कोष्ठमितिस्तस्यां यो लिखितो ध्रुवः स तदधःस्थितया धनर्णहृत्या धनर्णहारेण विहृताभिर्विभक्ताभिर्निजकेन्द्रनाडिकाभिः सुसंस्कृतः ॥ १३ ॥

पुनः कीदृशः—

निजभोगयुतः खगोदयात्स्याद्दिननाडीविघटीमयः स्वभोगः।
तिथिधिष्ण्ययुजां तथाऽन्यभोगात्स्युरिहैकैकसमेतकोष्ठमित्या ॥ १४ ॥

निजभोगेन युतः सूर्योदयाद्दिननाडीविघटीमयो वारघटीपलात्मकः स्वभोगो भवेत्। एतदुक्तं भवति। तिथिसाधने कर्तव्ये पूर्वोपकरणानि कोष्ठांश्च ज्ञात्वा तिथिकेन्द्रोर्ध्वाङ्कप्रमाणं यस्मिन्पत्रे स्यात्तत्पत्रं ज्ञेयम्। तत इष्टं दिनकोष्ठं ज्ञात्वा तस्मिन्पत्र इष्टकोष्ठाधो यो लिखितो ध्रुवः स तदधःस्थितहारेण विभक्ततिथिकेन्द्रनाडीभिर्ऋणहरे हीनो धनहरे युक्तास्तिथिभोगेन च युक्तः[ कार्यः ]। एवं स्पष्टस्थितिभोगो भवेत्। सूर्योदयात्तावतीभिर्नाडीभिस्तिथ्यन्त इति भावः। अनयैव युक्त्या नक्षत्रयोगसाधनं सुधीभिश्चिन्त्यम्। तत्तु स्वस्वकेन्द्रगश्च कोष्ठांश्च गृहीत्वा तत्तद्धनं कार्यम्। एवं तिथिधिष्ण्ययुजामेकैकयुक्तकोष्ठप्रमाणेनाऽन्यभोगा भवन्तीति यदुक्तं तदतिस्पष्टम्। अत्रोपपत्तिः पूर्वमतिविस्तरतयोपपादिता स्पष्टा च ॥ १४ ॥

अथ तिथिक्षयवृद्धिस्वरूपं सिंहोद्धतयाऽऽह—

उल्लङ्घ्य चेद्दिवसमेति तिथिः पराहं
पूर्वेऽह्नि षष्टिघटिकाः स्युरियं दिनार्धिः।
एकाह्नि चेत्तिथियुगं परनाडिकास्ताः
पूर्वोनिताः स्युरिह पूर्वगमात्क्षयोऽयम् ॥ १५ ॥

अस्यायमर्थः—तिथिर्दिवसं वारमुल्लङ्घ्यातिक्रम्य पराहं परदिनमेति प्राप्नोति पूर्वेऽह्नि पूर्वदिने षष्टिघटिकाः स्युरियं दिनर्द्धिः। चेदेकाह्नि—एकदिवसे तिथियुगं स्यात्तदा परनाडिकाः पूर्वाभिरूनिताः कार्याः। इह पूर्वगमात्पूर्वतिथ्यन्तात्क्षयः स्यात्। अत्रोपपत्तिः—यदा किल षष्टिघटिका तिथिरागता तदा पूर्वदिने षष्टिघटिकाः स्थाप्याः। अपरदिने शेषा इति युक्तमुक्तम्। यतस्तिथिनाड्यः सूर्योदयानन्तरं भवन्ति। सूर्योदयस्तु पूर्वसूर्योदयात्षष्टिघटिकाभिरेव। दिवसस्तु सूर्योदयद्वयान्तर्वर्त्येव भवति। उक्तं च सिद्धान्तशिरोमणौ–इनोदयद्वयान्तरं तदर्कं सावनं दिनमिति।

एकसूर्योदयमतिक्रम्येयं तिथिरधिकाऽऽगता । अत उक्तं-पूर्वेऽह्नि षष्टिघटिका इति । एवं क्षयेऽपि बोद्धव्यम् । तद्यथा-एकाह्नि तिथियुगं स्यात्तदा परनाडिकाः पूर्वोनिताः कार्याः । एकाह्नि तिथियुगागमनं तिथेरेकसूर्योदयोल्लङ्घनं च चन्द्रार्कगत्यन्तराधिक्याल्पत्वेन भवतीति स्पष्टम् । याः प्रथममितास्तिथ्यादिनाड्यस्ताः सूर्योदयानन्तरं भवन्ति । तदन्तरानीतनाड्योऽपि तत्सूर्योदयादेव । अतः प्रथमतिथ्यन्तादिद्वितीयतिथ्यन्तनाडीज्ञाने कर्तव्ये तदन्तरनाडीतुल्या [ ए ]व नाड्यो भवन्तीति । अतः परनाडिकाः पूर्वोनिता इति युक्तमुक्तम् । अत एव पूर्वतिथ्यन्तादिमा नाड्यो भवन्तीति वक्ष्यति । पूर्वगमात्क्षय इति । क्षयो नाम नाशः । एकदिने तिथिद्वये प्राप्ते सत्यपरदिने तत्तिथेरभावः । अतः क्षयोऽयमिति ॥१५॥

अथ नक्षत्रयोगज्ञानं तत्क्षयवृद्धिज्ञानं चेन्द्रवज्रयाऽऽह—

निजध्रुवोर्ध्वाङ्कयुताः स्वकोष्ठा भ२७शेषितास्ते भयुती च ते स्तः ।
एकैकयुक्ते प्रतिकोष्ठमत्र क्षयेऽपि वृद्धौ तिथिवद्विधिः स्यात् ॥ १६ ॥

स्पष्टार्थम् । अत्र वासना । नक्षत्रयोगमानं तु सौरवर्षादितः स्वकोष्ठतुल्यमेव । यतस्तिथिकोष्ठानां स्वाङ्गाग्न्यंशकोनानां तथा स्वदृग्दृग्भागाढ्यानां नक्षत्रयोगमानकानामेव कोष्ठसंज्ञा कृता । परंतु ते सौरवर्षादितः समागताः । तेषु यावन्नक्षत्रयोगध्रुवो योज्यते तावच्चैत्रादितोऽपि नक्षत्रयोगप्रमाणं भवति । यतश्चैत्रादिसौरवर्षायोरन्तरं ध्रुवतुल्यमेव । चैत्रादेरिष्टदिनपर्यन्तं तावन्ति नक्षत्राणि योगाश्च गता भवन्ति । ते परमसप्तविंशतितुल्या एव । अत उक्तं—निजध्रुवोर्ध्वाङ्कयुताः स्वकोष्ठा भशेषिता इति । शेषं स्पष्टम् ॥ १६ ॥

इदानीं संक्रान्तिसाधनमिन्द्रवज्रयाऽऽह—

साब्दे शकाः संक्रमणप्रवेशाः स्फुटा दिनाद्याः स्युरजादिकानाम् ।
त्रिंशत्तमासन्नदिनेऽजतस्ते भानां तथैवेन्द्र१४दिने भवेयुः ॥ १७ ॥

स्पष्टार्थम् । अत्रोपपत्तिः । सूर्यो मेषादौ वृषादौ वा कदा समायास्यतीति ज्ञानार्थ उपायः—रविर्मध्यगत्या, एभिर्दिनैः ३०।२६।१७ राशिं गच्छति । मध्यस्पष्टयोरन्तरं फलतुल्यमेव । तस्य स्वगतिप्रमाणेन यावन्ति दिनानि तैर्दिनैर्यावदेतानि संस्क्रियन्ते तावत्तैर्दिनैः स्पष्टत्वेन राश्यन्तरसंक्रमणं भवतीति प्रत्यक्षोपपत्तिः । तत्र सैकादिभेऽर्कं परिकल्प्य ततः फलमानीय तासां कलानां दिवसकरणार्थमनुपातः—

यदि रविगतिकलाभिरेकं दिनं तदा फलकलाभिः किमिति । लब्धदिनान्यस्मात् ३० । २६ । १७ एकादिगुणितध्रुवे सावने संस्कृत्य सप्ततष्टं कृत्वा द्वादशराशीनां सुखार्थमाचार्यो लिखितवान् । एवमेव नक्षत्रसंक्रमेऽपि बोद्धव्यम् । तत्रापि विंशतिकलाधिकत्रयोदश१३ । २० भागतुल्यं भोगं प्रकल्प्य पूर्वोक्तवत्फलनाडिकाः स्वभोगेन संस्कुर्यात् । भोगप्रमाणं तु मध्यमगत्या रविरेकं नक्षत्रं कतिभिर्दिनैर्भुनक्तीति । येऽनुपातसिद्धा दिवसास्त एकादिगुणिताः सन्तः फलनाडीभिः संस्कार्याः। एवं सप्तविंशतिनक्षत्राणां सुखार्थमाचार्यो लिखितवान् । संस्कारलक्षणं तु फलव्यत्यासेन धनफले ऋणं ऋणफले स्वं स्वभोगे कुर्यात् । मेषप्रवेशे तु फलनाडिकाः शून्यगुणितध्रुवे संस्कृता अपि तादृशा अपि ताः सप्तशुद्धाः कार्याः । तत्राब्दगुणोऽप्ययं १ । १५ । २१ योज्यः । एवं मेषप्रवेशो लेख्यः। अत्रोपपत्तिः स्पष्टतरैव । सूर्यस्तु राशिं त्रिंशदासन्नदिनैर्भुनक्ति । नक्षत्रं चतुर्दशासन्नदिनैर्भुनक्ति। भोगस्तु स्पष्टगतिप्रमाणे । अत एव तदासन्नदिने भवेयुरित्युक्तम् । ते सर्वे साब्दपाः कृताः । तत्रोपपत्तिर्गतप्रमेयैव स्पष्टतरा ॥ १७ ॥

इदानीमधिमासक्षयमासादि शार्दूलविक्रीडितेनाऽऽह—

मेषाद्द्वादशसंक्रमैश्च सहिताश्चैत्रादिमासा अमा-
न्तो मासः स विसंक्रमोऽधिक इति द्विः संक्रमः स क्षयः।
स्यात्स्पष्टाजभसंक्रमः प्रथमतः शुद्धेस्तृतीये दिने
शुद्धेः प्रोक्तथयो मधुप्रतिपदः स्युः पूर्ववर्षध्रुवैः ॥ १८ ॥

स्पष्टतरार्थमेतत् । अत्रोपपत्तिः । तत्र तावदधिमासस्वरूपमुच्यते । अधिको मासोऽधिमासः । कस्मात्सौरवर्षात् । द्वादश मासाः संवत्सर इति श्रुतेः । अत्र मासपदं सौरपरं व्याख्येयम् । सौरमासस्तु संक्रान्तिद्वयान्तर्वर्त्येव । एवंभूता ये द्वादश सौरमासास्ते वत्सर इति । केचित्तु द्वादशमासानां चान्द्रत्वभ्रममारोप्य क्षयमासाधिमाससंभवेन त्रयोदश मासा संभवन्तीति युक्तिबलेन वत्सरस्य द्वादशमासत्वं मन्यन्त इति श्रुतेर्व्यधिकरणत्वमापादयन्ते । तदसत् । तदुक्तं ब्रह्मसिद्धान्ते—चान्द्रो मासो ह्यसंक्रान्तो मलमासः स उच्यत इति । चान्द्रमासस्तु दर्शद्वयान्तर्वर्ती भवति । अयं यदा संक्रान्तिरहितस्तदाऽधिमासः । अयमर्थो व्याख्यायते । सौरमासान्तःपाती यदा चान्द्रमासो भवति तदैवेदं संभवति । यतः संक्रान्तिरेव सौरमासः। स यदा चान्द्रमासे नास्ति तदा तेन सौरमासेन चान्द्रमासादधिकेनावश्यं भवितव्यमेव । अन्यथाऽस्यासंक्रान्तित्वं मन्येत । राशेना( इयन्तरा ) त्संक्रमणं तावत्संक्रान्तिः । राशयस्तु द्वादशैव । संक्रान्तिस्तावत्सौरमासतुल्यैव । अतो द्वादश सौरमासा एव संवत्सर इति श्रुतिवैयर्थ्याद्वैयधिकरण्यापादनवैयर्थ्यप्रसङ्गापत्तेः । एवं द्वादशसौरमासमध्ये त्रयोदश मासाश्चान्द्रा भवन्तीति।

अतोऽस्मादधिकत्वं युक्तम् । तस्यापि संभवे नियमः। सौरमासान्तःपातिनि चान्द्रे मासे तावदधिमासः । सौरमासस्तदा चान्द्रमासाधिको भवेत् । यदा रविगतिरल्पा भवेत्तदैव सौरमासस्याधिकत्वेनाधिमाससंभवः । अधिमासादधिमासः सार्धद्वात्रिंशद्भिर्मासैरेव भवति । उक्तं च––द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा । घटिकानां चतुष्केण पतति ह्यधिमासक इति । इ.षोऽधिमासनिर्णयो मण्डलवाक्यप्रमाणेन ग्रन्थान्तरतो ज्ञेयः । अत्र विस्तरभयान्न लिखितः । एवं क्षयेऽपि बोद्धव्यः । ध्रुवतिथेः पूर्वं तृतीये दिने स्पष्टमेव संक्रान्तिः स्यात् । अत्र युक्तिः । मध्यममानेन शुद्धिदिन एव संक्रान्तिस्तत्र मन्त्र( न्द् )फलं किंचिदधिकं भागद्वयं तस्य स्वगतिप्रमाणेन यानि दिनानि तैर्दिनैः पूर्वं स्पष्टत्वेन मेषसंक्रातिर्भवति । तत्र फलदिनानि २ । १० । अतः पूर्वं तृतीये दिन इत्युक्तम् । शेषं स्पष्टतरम् ॥ १८ ॥

इदानीं पक्षान्तरोत्पन्नग्रहाणां दृग्गणितैक्यकर्तृकत्वकथनं पक्षान्तरोपकरणचालनादिकं शार्दूलविक्रीडितेनाऽऽह—

सौरोऽर्कोऽपि विधूच्चमङ्ककलिकोनाब्जस्तमस्त्वार्यज-
स्तेभ्यः स्याद्ग्रहणादि दृक्समामियं प्रोक्ता मया सा तिथिः ।
ग्राह्या मङ्गलधर्मनिर्णयविधावेषा यतो दृक्समाऽ-
थापेक्षा यदि चालितोपकरणैस्तत्पक्षजा स्यात्तिथिः ॥ १९ ॥

अस्यार्थः । अर्कः सौरः सौरपक्षजो ग्राह्यः । विधूच्चमपि सौरम् । अङ्ककलिकोनाब्जः सौरो ग्राह्यः । नवकलिकोनश्चन्द्रोऽपि सौरो ग्राह्य इत्यर्थः । तमस्तु राहुरार्यजः । तेभ्यो ग्रहणादि दृक्समं स्यात् । इयं मया प्रोक्ता तिथिः साऽपि दृक्समा ग्रहणादौ दृग्गणितैक्यकारिणीत्यर्थः । एषा मङ्गलधर्मनिर्णयविधौ ग्राह्या । यतो दृक्समा । तदुक्तं ब्रह्मसिद्धान्ते—ध्यानाग्रहोपदेशाद्बीजं ज्ञात्वा सुदैवज्ञैः । तत्संस्कृतग्रहेभ्यः कर्तव्यौ निर्णयादेशाविति । ज्योतिर्विवरणेऽपि––यस्मिन्देशे यत्र काले येन दृग्गणितैक्यकम् । दृश्यते तेन पक्षेण कुर्यात्तिथ्यादिनिर्णयमिति । अघटमानपक्षतिथ्यादेरप्रयोजकत्वेऽपि केषांचिन्नाद्वृथाभिमानिनामपेक्षा चेत्तर्हि चालितोपकरणैस्तत्पक्षजा तिथिः स्यात् । अत्रोपपत्तिः सुगमा । अत ऊर्ध्वं मूलग्रन्थ उपकरणश्लोकाष्टकम् । तदस्माभिः पूर्वमेव व्याख्यातम् ॥ १९ ॥

इति श्रीदिवाकरसुतविष्णुदैवज्ञविरचितायां सुबोधनीटीकायां
तिथ्यादिसंक्रान्तिसाधनाध्यायः ।

---

इदानीं सूक्ष्मनक्षत्रानयनं स्रग्धरयाऽऽह––

१० १४ १९ १८ १५ ३ २ ६ ९ २० १८
दिग्घ्नीन्द्राप्तोडुसंख्यातिधृतिधृतितिथित्रिद्विषड्गोनखाशा
२५ ११ २४ २८ ४०
तत्त्वेशार्हन्मितोडोर्विगुणलवनभाख्यन्विता अश्विनाद्यः ।
संस्कार्याः कर्णषण्णां धननवकुघटी १९ भिर्भघट्याहतास्ताः
षष्ट्याप्ताः सूक्ष्मजाः स्युर्नवविधुघटिका १९ वैश्वतश्चाभिजित्स्यात् ॥

अस्यार्थः-उडुसंख्या दिग्घ्ना दशगुणा कार्या। पुनरिन्द्राप्ता चतुर्दशभक्ता। अतिधृत्यादिनक्षत्रेषु विगुणलवनभस्त्र्यन्विताः २९ । ४० कार्याः। ता अस्वनाड्यः ऋणनाड्यः। कर्णषण्णां श्रवणान्तनक्षत्राणां धनं नवकुतिथिघटीभिः संस्कार्याः। ता भघट्या हताः, नक्षत्रगतैष्यनाडीयोगेन हताः षष्ट्याप्ताः सूक्ष्मजाः सूक्ष्मनक्षत्रजा नाड्यः। ताभिः स्थूलनक्षत्रनाड्यः संस्कार्या इत्यनुक्तं ज्ञेयम्। वैश्वतः-उत्तराषाढातो नवविधु१९घटिका अभिजित्स्यात्। अत्रोपपत्तिः-स्थूलनक्षत्रं त्वष्टशततुल्यभोगप्रमाणेनाऽऽनीतम्। यतश्चक्रकलाभिः २१६०० सप्तविंशतिनक्षत्राणि। तत्तु लोकव्यवहारसिद्ध्यर्थम्। अथ सूक्ष्मं तावदागमप्रामाण्येन। तद्यथा-अध्यर्धभोगानि नक्षत्राणि विशाखा पुनर्वसु रोहिणी। उत्तरात्रयं च। अर्धभोगानि षट्। आश्लेषाऽऽर्द्रा स्वाती भरणी ज्येष्ठा शतभिषक्। एभ्यः शेषाणि पञ्चदश एकभोगानि। भोगप्रमाणं तु चन्द्रमध्यगतिः ७९० । अध्यर्धभोगः ११८५ । अर्धभोगः ३९५ । सर्वर्क्षभोगैरूनितश्चक्रकलानां यच्छेषं सोऽभिजिद्भोगः २५४ । अथ तत्साधनं ग्रहं कलीकृत्याश्विन्यादीनां भोगाञ्शोधयेत्। यावन्तो भोगाः शुद्धास्तावन्ति गतभानि शेषकला गताः। एम( वं )? शुद्धभोगशुद्धा एष्या भवन्ति। गतैष्यकलाः षष्टिगुणा ग्रहगतिभक्ताः फलं गतैष्यनाड्य इति। मूलवासना। तत्राऽऽचार्येणेदं गुरुकर्मोपसंहृत्य लघुकर्मणा तत्साधनं रचितम्। तद्यथा-गतनक्षत्रभोगानामैक्यं तावदष्टशतनक्षत्रसंख्यातः शोध्यम्। तत्राऽऽदौ नक्षत्रभोगप्रमाणे एकभोग७९०तुल्यमेव कल्पितम्। तदध्यर्धभोगवशेन यदन्तं तदग्रे विगुणलवनभस्त्र्यन्विता इत्यनेन क्षिप्तम्। एवं नक्षत्रसंख्या एभिर्गुण्या ७९० । ३५ । अष्टशतगुणनक्षत्रसंख्याऽत एव शोध्या। अतो लाघवार्थं गुणयोरेवान्तरमिदं ९ पुनर्नाडीकरणार्थं षष्ट्या गुण्यं चन्द्रगत्या भाज्यम्। तत्र गतिरष्टशतकलातुल्या कल्पिता। तन्न्यूनाधिक्यं भघट्या हता इत्यादावानीतम्। एवमिदं ९ षष्ट्या गुण्यं, अष्टशतभक्तं फलं ० । अनेनेष्टनक्षत्राणि गुण्यानि। अत इदं चतुर्दशसवर्णितं
४२

गुणस्थाने दश १० हरस्थाने चतुर्दश १४ । अत उक्तं-दिघ्नीन्द्राप्तोडुसंख्येति। परंत्वेतत्स्थूलम्। यत एकभोगप्रमाणेनाऽऽनीतम्। तदध्यर्धभोगप्रमाणेन तु साध्यं तत्साध्यते। एकभोगाध्यर्धभोगयोरेकभोगार्धभोगयोश्चान्तरं तुल्यमेव तदर्धभोगतुल्यं ३९५ । इदं पुनर्नाडीकरणार्थं षष्ट्या गुण्यमष्टशततुल्यगत्यैव भाज्यम्। एवं कृते विगुणलवनभस्त्रय २९ । ४० एवोत्पद्यन्ते। पूर्वफलं स्थूलर्क्षनाडीभ्यः शोध्यम्। यतोऽधिकं गृहीतम्। एवं गुणलवनभस्त्रयोऽपि शोध्याः। अत ऋणयोगः कार्यः। अत उक्तं—विगुणलवनभस्त्र्यन्विता अस्वनाड्य इति। अनयैव युक्त्या कर्णषण्णां धननवकुघटीभिः संस्कारो वेदितव्यः। नन्वेवं कृतेऽप्यस्य स्थूलत्वम्। यतो गतिरष्टशततुल्या कल्पिता। तत्सूक्ष्मकरणे युक्तिः। यदाऽष्टशततुल्या चन्द्रगति-

स्तदा नक्षत्रनाड्यः षष्टितुल्याः । एवमनयोर्घातोऽयं ४८००० यावच्चन्द्रगत्या भज्यते तावन्नक्षत्रगतैष्यनाडीयोग एव लभ्यते । अतो भघट्या हताः षष्ट्याऽऽप्ता इति युक्तम् । ताभिः स्थूलनक्षत्रनाडिकाः संस्कार्याः । ताः सूक्ष्मजा भवन्तीति निरवद्यम् । वैश्वतो नवविधु१९घटिका अभिजिदित्यत्राऽऽगम एव प्रमाणम् ॥ २० ॥

इदानीं कृतस्यापि तिथ्यादिवाराद्यस्य देशान्तरे कालान्तरे च संस्कारं क्रमाच्छ्लोकद्वयेनाऽऽह—

पलभाब्धिवियोगताडितैर्निजकोष्ठाधरगैर्निजैः पलैः ।
तिथ्यादिकमूनयुक्स्फुटं युगतोऽल्पाक्षभपत्तनेऽन्यथा ॥२१॥
अत्यष्ट्य१७यनांशकान्तरघ्नैः कोष्ठाधःस्थपलैः सुसंस्कृतं स्वैः ।
तिथ्यादि विधेहि भूरिकालेत्यष्ट्य१७ल्पायनभागके विलोमैः ॥२२॥

श्लोकद्वयं सुगमम् । अत्रोपपत्तिः सुगमाऽपि वक्ष्यते । अहो अत्राऽऽचार्येण याम्योत्तरं देशान्तरं चरसंज्ञं वेदाङ्गुलां विषुवतीं प्रकल्प्य तथा चोदयान्तरादौ सप्तदशांशानेव प्रकल्प्य तावद्वारादि साधितम् । इष्टाक्षभायनांशप्रमाणेन तु साध्यं तत्कथमित्युच्यते । लाघवार्थं दशदशकोष्ठकवृद्ध्याऽन्तरफलान्येव साधितानि । तानि यथा—कोष्ठकास्तु वर्षादिश्चान्द्रा एव । तत्र दशचान्द्राणां मध्ये सूर्यो भागाद्यः ९ । ४२ । ३०, अयं सायनः २६ । ४२ । २०, अस्मा[ द् ]वेदाङ्गुलपलभाप्रमाणेन चरमानीतं ३५ । तथा च पञ्चाङ्गुलपलभाप्रमाणेनाऽऽनीतं ४४ । अनयोरन्तर ९ । इदं दशकोष्ठाधो लेख्यम् । एवं दशदशकोष्ठवृद्ध्याऽमुं सूर्यं ९ । ४२ । २० एकादिगुणितं विधायायनांश१७सहितं कृत्वा वेदाङ्गुलपलभाप्रमाणेन चरखण्डेभ्यश्चरं प्रसाध्य पुनरमुं विधिं पञ्चाङ्गुलाक्षभाप्रमाणेन कृत्वा तयोश्चरयोरन्तरं सुखार्थमाचार्यो लिखितवान् । तद्धनर्णवासनाऽन्तरे क्रियमाणे स्पष्टा । अतोऽनुपातः । यदि रूपतुल्येन पलभान्तरेणेमान्यन्तरपलानि तदेष्टपलभाब्ध्यन्तरेण किमिति । अत उक्तं–पलभाब्धिवियोगताडितैरित्यादि । एवं नक्षत्रयोगकोष्ठमध्येऽपि रविं प्रचाल्य सुधीभिरन्तरपलानि ज्ञेयानि । एवमेवायनांशान्तरपलेषु बोद्धव्यम् । शेषं स्पष्टम ॥ २१ ॥ २२ ॥

अथ कृतेऽप्यस्मिन्वाराद्ये भ्रष्टाङ्कज्ञानार्थं किंचिदिन्द्रवज्राद्वयेनाऽऽह–

यत्कोष्ठकाधो ध्रुवकस्तदग्र्यकेन्द्रे च तत्कोष्ठमितौ ध्रुवो यः ।
षष्टिस्तयोरन्तरनाडिकाप्ता स्वर्णं हरोऽग्र्यध्रुवकेऽधिकोने ॥२३॥
धनर्णहारोद्धतषष्टिनाडीयुतोनितस्वोर्ध्वगतो ध्रुवो यः ।
तदग्र्यकेन्द्रे स भवेदथायं विलोमसंस्कारवशेन पूर्वः ॥२४॥

यस्कोष्ठेति धनर्णहारेति च स्पष्टार्थं श्लोकद्वयम् । अत्रोपपत्तिर्मुहुरान्दोलितप्रमेयत्वात्स्पष्टा ॥ २३ ॥ २४ ॥

अथ तिथ्यादीनां स्थूलत्वेन क्षयवृद्धिज्ञानं सिंहोद्धतात्रयेणाऽऽह—

वृद्धिस्तिथेः कुगुणवेदशरेषुबाण-
बाणाब्धिरामयमभूघटिकाः क्रमेण ।
साम्यात्क्षयः कुयमरामशरेषुबाणा-
ङ्गाङ्गर्तुषट्कशरबाणयुगाग्निदृक्क्ष्माः ॥ २५ ॥

भस्य क्षयात्कुयमरामयुगाब्धिवेद-
वेदाब्धिरामगुणपक्षकुसंख्यनाड्यः ।
वृद्धिः क्रमात्कुगुणवेदशराङ्गषट्क-
षट्कर्तुषट्कशरवेदयमेन्दवः स्यात् ॥ २६ ॥

वृद्धिर्युतः कुयमपक्षकुचन्द्रखाभ्रं
नाड्यः क्रमादपचयोऽथ कुपक्षरामाः ।
वेदेषुबाणरससप्तनगाष्टनागा-
ष्टाष्टाद्रिसप्तरसबाणयुगाग्निदृक्क्ष्माः ॥ २७ ॥

तिथेर्नक्षत्रस्य योगस्य च नाडी यदाऽऽरम्भः, अथवा पूर्वापरनाडीसाम्ये क्षयारम्भो वा तदा स्वस्वोक्तवृद्धिक्षयनाडीभिः क्षयवृद्धी ज्ञेये । शेषं स्पष्टम् । अत्रोपपत्तिः । स्वस्ववाराद्यस्य लिखितस्य वृद्धिनाड्यो ज्ञात्वा सुखार्थमाचार्येण पठिताः । परं ताः स्थूलाः । यतो हरसंस्काराभावः । हरसंस्कारे जाते सूक्ष्मपञ्चाङ्गमेव । तदनियतम् । इदं तु नियततया सूक्ष्मर्क्षदेशान्तरादिसाधनाध्याये सुखार्थं स्थूलमपि पठितम् ॥ २५ ॥ २६ ॥ २७ ॥

इति विष्णुदैवज्ञविरचितायां सुबोधनीटीकायां सूक्ष्मर्क्ष-
देशान्तरादिसाधनाध्यायो ग्रन्थश्च समाप्तः ॥